# ॥ अथ सप्तदश महासामानि ॥

---

## ॥ ब्रह्मसाम ॥ १

१
ओ३म् ॥ १ ॥

“ओमित्येतदक्षरमुद्गीथमुपासीत। ओमिति ह्युद्गायति तस्योपव्याख्यानम्। एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः। अपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः।”–इति छा० ब्रा० ३।१।१।

---

## ॥ सत्यसाम ॥ २ ॥

२उ १उ २र
भूर्भुवस्वः ॥ २ ॥

“सत्यं साम सर्वस्य वा लोकस्य द्वारं विवरणं देवानां लोकद्वारस्य वा वेदस्वाध्यायम् अयातयामत्वम्”–इति छा० ब्रा० १।१।२।

---

॥ व्याहृतिसाम ॥ ३ ॥

( नैतत्साम कचिदपि गानग्रन्थे श्रुतम् ; गीयते तु बहुत्र )

भूः । भूः । होइ । भूः । होइ । भूः । हा३१
उवा २ । ए । सुवर्ज्योती २३४५: ॥ भुवाः । भुवः ।
होइ । भुवः । होइ । भुवः । हा३१उवा२ । ए ।
सुवर्ज्योती २३४५: ॥ सुवाः । सुवः । होयि । सुवः ।
होयि । सुवः । हा३१उवा२ । ए । सुवर्ज्योती२३४५: ॥
महाः । महः । होयि । महः । होयि । महः । हा३१
उवा२ । ए । सुवर्ज्योती २३४५: ॥ जनाः । जनः ।
होयि । जनः । होयि । जनः । हा३१उवा२ । ए ।
सुवर्ज्योतो २३४५: ॥ तपाः । तपः । होयि । तपः ।
होयि । तपः । हा३१उवा२ । ए । सुवर्ज्योतो२३४५: ॥
सत्याम् । सत्यम् । होयि । सत्यम् । होयि । सत्यम् ।
हा३१उवा२ । ए । सुवर्ज्योती २३४५: ॥ पुरुषाः ।
पुरुषः । होयि । पुरुषः । होयि । पुरुषः । हा३१
उवा२ । ए । सुवर्ज्योती २३४५: ॥ ३ ॥

## ॥ बृहत्साम ॥ ५ ॥

छ० ३प्र० १अ० ५द० २ऋचि, आ० १प्र० १अ० २०साम ।

१ २र ३ १ २र ३ १ २
त्वा मिद्धि हवामहे सातौ वाजस्य कारवः ।
२ ३ १ २ ३ १ २ ३ १ ३ २उ ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ५

२र २ २ २ २ १ १र २
औँहोइ त्वामिद्धि हवामहा३ए । सातौ वाजा ।
२ ३ ५ १ २ ५र ४र ५ २ १
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । इन्द्रा
१ २ २ १ ५ १र
वृत्रेषुवाई । द्रासा३१त् । पतिं ना२३४राः । त्वां
२ २ ५र ४र ५ २ ५ ५
काष्ठा३४ । औहोवा । सुर् षर्वा२३४ । ताः । उहु-
५ १
वा६हाउ । वा । हस् ॥ ५ ॥

"इषिति बृहत् प्राण सुदजयत्"—इति ब्रा० ७ । ६ ॥
"प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं मनसा
ध्यायत् तस्य यन्मनस्यासीत्तद् बृहत् समभवत् स ,
आदधीत गर्भो वै मेऽयं सन्तर्हितस्तं वाचा
प्रजनयाइति"—इति च ब्रा० ७ । ६ ॥ ५ ॥

॥ रथन्तरम् ॥ ६ ॥

छ० ३प्र० १अ० ५द० १ऋचि, या० २प्र० १अ० २१साम ।

३ १ ३ १ ३ ३ १ २
अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।
१ २ २ २ २र ३ २ ३ १ २ ३ १ २
ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः ॥ ६

२ ५ र र र १ ५ १ २र र
आभित्वा शूरनोनुमो वा । आदुग्धा इव धेनव
र र १ २ १
ईशान मस्य जगतः । सुवा २३ र्दृ शाम । आइ
र २ १ ४ ५ र र ५
शानमा २३ इन्द्रा ३ । तास्थु २३४ षा । औ वा ६ ।
५ १
हाउवा । अस् ॥ ६ ॥

"अभीति रथन्तर मपान मभिसमवेदत"—इति ब्रा० ७ । ६ ।

"स वाचं व्यसृजत सा यामयन्तर मन्वपद्यत रथम्मर्या:
चेतातारोदिति तद्रथन्तरस्य रथन्तरत्वम्"—
इति च ब्रा० ७ । ६ । ६ ।

---

"प्राणापानौ वै तदद्रथन्तरे ज्योगामयाविन उभे कुर्यादप-
क्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावे-
वास्मिन् दधाति"—इति च ब्राह्मणान्तरम् ७ । ६ । ५, ६ ॥

---

## ॥ महावामदेव्यसाम ॥ ७ ॥

उ० १प्र० १अ० १२सू० १—३ ऋचः, ऊ० १प्र० १अ० ५साम।

कया नश्चित्र आ भुवदूतो सदावृधः सखा। कया शचिष्ठया वृता॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढाचिदारुजे वसु॥ अभी षु णः सखीनामविता जरितॄणाम्। शतम्भवास्यूतये॥७

काऽ५या। नश्चा२इत्रा३आभुवात्। ऊ। तो सदावृधः स। खा। औ३हो हाइ। कया २३ शचाइ। ष्ठयौ हो ३। हुम्मा २। वाऽ२र्त्ता ३५ हाइ॥ काऽ५स्त्वा। सत्यो ३ मा३ दानम्। मा। हिष्ठो मा त्सादन्ध। सा। औ ३ हो हाइ। दृढा २३ चिदा। रुजौ हो ३। हुम्मा २। वाऽ२ सो३५ हायि॥ आऽ५भी। षुणा३ः सा ३ खीनाम्। आ। विता जरायि तृ। णाम्। औ३हो हायि। शता २३म्भवा। सियोहो३। हुम्मा २। ताऽ२यो ३५ हायि॥ ७॥

"एते वै पूर्णात् पूर्ण मभ्युत्तिष्ठन्ति ये वामदेव्येन स्तुवन्ति-
अन्त्यन्तरिक्षं वामदेव्य मन्तरिक्षेणेदए सर्वं पूर्णम्" —
इति ब्रा० १५। १२॥ ७॥

"इयं वै रथन्तर मन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लोका-
स्त्रिरात्रो यदेतानि सामानि सम्राञ्चि करोतीमानेव तल्लोकान्
सन्दधाति तेन विराज माप्नोति"–इति ब्रा० १६।११॥ ५—७॥

॥ यज्ञायज्ञीयसाम ॥ ८॥

छ० १प्र० १ष० ४द० १ऋचि, गे० १प्र० २ष० २५साम।

२ १ २ १ १२ ३ १' २ २ १२
यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
१ २ ३२३ १२ ३ १ २ १२ ३ १ २ए
प्रप्र वयममृतं जातवेदसं प्रियम्मित्रन्न शएसिषम् ॥८

४ २ १ १ २ १ २
यज्ञाऽ५ य । ज्ञा ३ वो ३ ग्नायाइ । गाइरा
२ १ २ २ १ ३ए १
गिरा। चा ३ दाक्षा ३ साइ। प्र प्रा २ वयममृतम्।
१' २ १ २ २ १
जाता २३ वा। दुम्माइ। द्रा ३ साम्। प्रायम्मित्र
१ २ २ २ १ १ १ १
न्नशा२एसिषाउ। वा२३४५ऽ॥ ८॥

"ब्रह्मणो वा एष रसो यद् यज्ञायज्ञीयं यद् यज्ञायज्ञीयेन स्तुवन्ति
ब्रह्मण एव रसे यज्ञं प्रतिष्ठापयन्ति"–इति ब्रा० ८। ६॥ ८॥

"एतद्वै प्रत्यर्चं महाव्रतं तस्य गायत्रए शिरो बृहद्रथन्तरे पक्षौ वामदेव्य मात्मा यज्ञायज्ञियं पुच्छं दक्षिणा एवाकों नैम याव प्रत्यर्चं महाव्रतेन स्तुते य एतेन यजते"—इति ता० १६।११ ॥ ४–७ ॥

॥ इन्द्राणीसाम ॥ ८ ॥

छ० ३प्र० १प० १द० १०ऋचि, गे० १५प्र० २प्र० ११साम ।

न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
न कोवं यथा त्वम् ॥ ८ ॥

न । कोना को । आयिन्द्रत्वदुत्तराम् । न ज्यायोऽ
२ । अस्ता२३इ ह । हुं ऽ२ हुम् । वा २३४ हान् ।
नक्ये । वं या २३या । हुं ऽ२हु२४३म् । तू ३४५वो ६
हाइ ॥ ८ ॥

"आप्यद्दश्च चदवे तिष्ठन् नकोनाको इत्येतत् त्रिःससकलो गायेदेतत्सर्वमापोगतसन्नित मेतेन वा सर्वान् कामा-मवाप्नोति यथैव वेद यथैव वेद ॥"
—इति सा० ब्रा० १ । ४।॥ ८ ॥

॥ भर्गयशसी सामनी ॥ १०,११ ॥

छ० ३प्र० २अ० २द० ६ऋचि, आर० २प्र० २अ० ११साम भर्गम्।

वृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥१०

हाउधामयत्। हाहाउधामधामायत्। हाहाउ
वृहद्धामधामायत्। वृहदिन्द्रा। यगा२या२३४ता।
मरुतोइ। वृहा२न्ता२३४मम्। येनज्योतिरजनयन्।
ऋता२वा२३४धाः। देवन्देवा। यजा२गृ२३४वी। हाउ
धामयत्। हाहाउधामधामायत्। हाहाउवृहद्धामधा।
मा२या२३४। औहोवा। ए३। भर्गा२३४५: ॥ १० ॥

आ० १प्र० ४द० १०ऋचि, आर० ३प्र० २अ० १२साम यशः।
(यशःसाम्न ऋक् खलु अविकृतैव गीयते)

हाउ। ३। वा। यशोमाद्यावापृथिवी। हाउ।
३। वा। यशोमेन्द्रबृहस्पती। हाउ। ३। वा। यशो
भगस्यविन्दतु। हाउ। ३। वा। यशोमाप्रतिमुच्यताम्।
हाउ। ३। वा। यशस्वियस्याः सण्सदः। हाउ। ३। वा।

२ १ २ १र र २५ १ २
अहं प्रवदितास्याम् । हाउ । ३ । वा । अन्नमिदये ३
५
इस् ॥ ११ ॥

"भर्ग एव भर्गेण तुष्टुवानो भवति यशो यशसा"—इति, "भर्गयशसी भवतो भर्गेणैवास्मै भर्गौ दधाति यशसा यशः"—इति च ब्रा० १५ । ३ ; १८ । ८ ॥ १०,११ ॥

---

॥ परमेष्ठिप्राजापत्यव्रतम् ॥ १२ ॥

आ० १प्र० ३द० १ऋचि, आर० ४प्र० १ष० ७साम।

१ २ २ १ ११ १र २र १ २ २ १र २र
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः ।
१ २ २ १ २ ३ १र २
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ १२

२र १ — १ १ —
हाउ । ३ । आनो २ व्रु वाङ् । २ । आनो २
१ २ १ २र र १ २र र ३ १११
व्रु वा२ या२३४ । औहोवा । रक्षतनोरक्षितारा२३४५ः।
२र १ — २र र १ २र र
हाउ । ३ । आनो २ व्रु० पूर्वपाठः । गोपायतगोपा
र ३ ११११ २र १ — १ २ १ २
यितारा२३४५ः । हाउ । ३ । आनो २ ० । मयिवर्चः
१ २ — १२र १ १ २ —
अथोया १ शा २ः । अथोयज्ञ । स्ययात्पा १ या २ः ।
२ र२र १ २ — २ १ र १ २
परमेष्ठी । प्रजापा १ ती २ः । दिविद्यामि । वदृंहा१
२र १ — १ २र र
तू २३ हाउ । ३ । आनो २ ० । रक्षतनोरक्षिता

२ ११११ २र १ — २रर १ २र
रा २३४५ः । हाउ । ३ । आनो २ ० । गोमायतगो
र र २ ११११ २र १ — २र
पायितारा २३४५ः । हाउ । ३ । आनो २ ० । ए ।
१ २र र र र र १ २रर र २र
रक्षतनोरक्षितारोगोमायतगोपायितारः । २ । ए ।
१ २र र र र र १ २रर र ११११
रक्षतनोरक्षितारोगोमायतगोपायितारा २३४५ः ॥१२॥

"रोहिण्यां वा रोहिण्या गोः सरूपवत्साया पयसि रक्त-शालीनाए स्थालीपाकए श्रपयित्वा परमेष्ठिनः प्राजापत्यस्य-व्रतेनाभिजुहुयात्तद्वत्सकलः यतावर मेतेनैवाभिगोयोद्वृत्य सभार्यः प्राश्नीयात् सरूपान् दीर्घायुषः पुत्रान् लभते" सा० ब्रा० २।८ ॥१२।

———

॥ अर्कपुष्पसाम ॥ १३ ॥

छ० ६प्र० २अ० २द० ११ऋचि, गे० १६प्र० २अ० १४साम ।

२ १२ २ १२ २१ २र २ १२
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि
१ १२ १२ १२उ २ १ २ १२ २
विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास
१ २र १ १ २र
इद्वहन्तः सं तदाशत ॥ १२ ॥

२ १ २र १ २१ २ १ २
पवित्रन्तेविततंब्रह्मणस्पतेइ । हुवे२३ । २ । हो
२ २ २ १२ २र १ १र १
वा३ हा३ । हाइ । प्रभुर्गात्राणिपरियेषिविश्वता२३ः ।
२ १२ २ १ १ २ ११
हुवे२३ । २ । होया३ हा३ । हाइ । अतप्ततनून

५र १र ३ ३ १२ २ २
तदा२ मोअय्य ते ३ हुवे २३। २। होवा३हा३हाइ
१र २ १ ३ १ ५र १ १२
मृतासद्दुहन्तःसत्नदा२शत। हुवे२३। २। होवा३
२ २ ३र र २ १र र र र १र
हा३। हा३४। औहोवा। अर्कदेवाना२म्पर२मेवि
र २ ।।।।
यो२मा२३४५न् ॥ १३॥

"अर्कपुष्पं भवत्यन्नं वै देवा अर्कं इति वदन्ति रस मस्य पुष्प मिति स रस मेवाखाद्य मवरुन्धे अर्कपुष्पेण तुष्टुवानः" — इति ब्रा० १५। ३॥ १३॥

## ॥ सेतुषाम ॥ १४ ॥

आ० १प्र० १द० ८खण्ड, आर० ३प्र० १प० ३४साम।

१ ३ २ ३२ ३ २ ३ १२ ३ १ २ ३ १ २ ३ १ २
अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम।
१ २ १२ ३ २उ ३ १ २ ३ २उ ३ २ १२ ३ १२
यो मा ददाति स इदेव आवदह मन्न मन्न मदन्त मद्मि॥

२र ३र र २ २ १ १र
हाउ। २। सेतूᳪस्तर। ३। दुस्त। रान्। ३। दा
२र ३र र १ २र र ।
नेनादानम्। ३। हाउ। ३। अहमस्मि प्रथमजाऋता
२ ।।।।। २र ० १र र २ १
२३स्या२३४५। हाउ। ३। सेतूᳪस्तर। ३। दुस्त।
र २र १र २ १ र २र १र
रान्। ३। अक्रोधेन क्रोधम्। २। अक्रोधेनक्रोधम्।
२र र र र र १ २ ।।।।।
हाउ। ३। पूर्वं देवेभ्यो अमृतस्य ना २३मा२३४५

२र १र२ २ २१ २१र
हाउ। ३। सेतूᳪस्तर। ३। दुस्त। रान्। ३। अक्रया
२र २र २र र र र१ २
अक्राम्। ३। हाउ। ३। योमाददाति स इदेवमा२३वा
११११ २र १रर र २१
२३४५त्। हाउ। १। सेतूᳪस्तर,। ३। दुस्त। रान्।
२१र र १ २र १ २
सत्येनानृतम्। हाउ। ३। अहमन्नमन्नमदन्तमा२३ ऽऽ
१११ २ऽ ऽ ऽ २र१र २ २र११
३४५। हाउ हाउ हाउवा। एषा गतिः। ३। एतद-
१२ १र २ १र२ २र
मृतम्। ३। स्वर्गच्छ। ३। ज्योतिर्गच्छ। ३। सेतूᳪस्ती
१र २१ ११११
र्त्वाँचतुरा ३२४५ः॥ १४॥

"आजाभ्याजे शुक्रपक्षे रात्रावरोहिण्यां शुक्लियायां हावस्तरतादीनि चत्वारि सेतुसाम वेदः पवित्रवर्गं एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः पूतो भवति"

—इति सा० ब्रा० २। १॥ १४॥

---

॥ तवश्यावीयं साम ॥ १५ ॥

॥ एतच्च साम गेयादिचतुर्गानग्रन्थेभ्यः पृथगेवाधीयते ॥

॥ मूलन्त्वस्य गायत्री, व्याहृतयः, स्तोभाश्च ॥

१ ११११ १२ऽ र २१ २
ॐ हा२३४५। ॐ भूः। ॐ भूमिर्दिवमन्तरिक्षम्।
१ र र रर२ १ रर
ॐ भुवः। ॐ ऋचोयजूᳪषिसामानि। ॐ भार्गोदेवस्य
र ११११ १ ररररर
धीमाही २३४५। ॐ स्वः। ॐ प्राणोपानोव्यानः

र २ १ १ १ २ १र र २ १११११ १
समानउदानः। ॐधियोयोनःप्रचो२३४५। ॐ

मह:। ॐजनः। ॐतपः। ॐसत्यम्। ॐपुरुषाः।

र र २१ १ ११११
ॐपरोरजोयसृतोम्। ॐह्८२३४५। हुम्।

— १ २ ११११ १२ र
श्रा२। दायो। श्रा २३४५। ॐभूमिरन्तरिक्षन्द्यौः।

र १ र
ॐतत्सवितुर्वरेणियोम्। ॐजा२र्का। हाउ३। हो३

१ ११र र २ र १ १ २
वाक्। ॐवह्मोपोयजोयसृतोम्। ॐजा२र्का। हाउ३।

२ १ र र र र र र १२ १
हो३वाक्। ॐप्राणोपानोव्यानोसमानउदानः। धि-

र र २ ११११ १ र २
योयोनःप्रचो२३४५। ॐजा२र्का। हाउ३। हो३वाक्।

१र १ १२ १२ २ १र १
३। धर्मो२धर्मः। धर्मविधर्म। ३। सत्यज्ञाय। ३।

२ १ २ १ ५ १ ५ १
ऋतंवद। ३। ह्८वंव२वंव२वम्॥ १५॥

"तदयामोयं मनुष्यान: शुचिः पूतो ब्रह्मलोक मभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते" इति सा० ब्रा० २।१।१५।

---

॥ भारुण्डसाम ॥ १६ ॥

। एतदपि साम गेयादिचतुर्ग्रन्थेभ्यः पृथगेवाधीयते।

। मूलस्थस्य छन्दयमितिमन्त्रः, छ १।२।२।४, सोमाय।

१ २उ १ १२ १ १२ २ १२ २ १२
इमम् स्तोम मर्हते जातवेदसे रथमिव सम्महेमा

मनोपथा। भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषाम वयं तव ॥ १६ ॥

उद्वयाम्। तमसस्पारी२। ज्योतिःपश्यन्तउत्त- रा२म्। स्वःपश्यन्तउत्तरा२म्। देवन्देवत्रा२सू२३४ रीम्। अगन्मज्योतिरुत्तमा१म्। असारवातोतुन- आतोतू३४। औहोवा। ऊ२वातः। ३। वातो वातः। २। वातोन्नृणानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। इमाए्सो २३४मास्। अहीते१३४जा। तावेदसे३। होइ। होइये३। ३। होइये। ३। उ२वातः। ३। वातो वातः। २। वातोन्नृणानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। रथा२ मो३४वा। सम्माहे२३४मा। मानी। पया३। होइ। होइये३। ३। होयिये। ३। उ२वातः। ३। वातो वातः। २। वातोन्नृणानिपुरा३याः। यमोहाउ। ३। पितरोहाउ। ३। भारण्डोहाउ। ३। भद्राहो२३४नाः।

प्रमातौ२३४रा । स्वासउ्सदेइ । होइ । होयियेइ ।
३ । होइये । ३ । ऊरवातः१ ३ । वातोवातः । २ ।
वातोन्नृण्णानिपुराइया: । यमोहाउ । ३ । पितरोहाउ ।
१। भारराडोहाउ ।१। अग्नाइसा२३४ख्याइ । माराइया
२३४मा । वायन्तवा३ । होई । होइयेइं । १ ।
होइये । १ । ऊरवातः १ ३ । वातोवातः । २ । वातो-
न्नृण्णानिपुराइयाः । यमोहाउ । २ । पितरोहाउ । १ ।
भारराडोहाउ । २ । भारराडा२४औहोवा । ए । वातो-
नृण्णानिपुरयद्वयम:पितरोभारण्ड: । २ । ए । वातोनृ-
ण्णानिपुरयद्वयम:पितरोभारराडार । ई२३४५ ॥ १६ ॥

॥ महानाम्नीसाम ॥ १७ ॥

एतत्तु अमृतसंहितायां पञ्चमं द्रष्टव्यम् ॥ १७ ॥

"सप्तदश थाम्ना भवति प्रजापतिर्वै सप्तदशः प्रजापति मेवाप्नोति" —इति, "सप्तदशो वै प्रजापतिर्यत् सप्तदशं व्रतं भवति प्रजापति मेवाप्नोति" —इति च ता० २२।५।१२—१७ ॥

इति सामश्रमीत्युपनामावसथ्यसत्यव्रतशर्मणा
सङ्कलितानि ऋग्ब्राह्मणसहितानि
सप्तदश महासामानि ॥

———

# ॥ अथ संहितासप्तकम् ॥

## १ ॥ अमृतसंहिता ॥

"प्रथमस्त्रिवर्गः साविषर्यां भायत्रं महानाम्न्यस्यैषाम्रता नाम संहितैतया वै देवा अमृतत्व मैति य एवं वेद"—इति सा० ब्रा० १ । ४ । २३-२५ ॥ १ ॥

ऋ०—१प्र० १प० १द० १ऋचि,

गी०—१प० १प्र० १प्र० १-३ त्रीणि सामानि ।

ओग्नायि । आयाही ३ वोइतो यां २ इ । तोया
२ इ । गृणा नोइ । व्यदातोया २ इ । तो या २ इ ।
नायि हो तासा २३ । त्सा २ इ । वा २३४ औहोवा ।
ही २३४ पी ॥ १ ॥

अग्न आयाहि वी । तयाइ गृणानो हव्यदाता
२३ याइ । निहोतासत्सिवर्ही २३ इषि । वर्हो २ यिषा
२३४ औहोवा । वर्हौ ३ षी २३४५ ॥ २ ॥

अग्न आयाहि । वा५ यितयाइ । गृणानोहव्यदा

१ ता ३ ये । निहोता २३४ सा । त्सा २३४ यि बा३ ।

हा २३४ यिषो ६ हाइ ॥ ३ ॥

उ०— ६प्र० ३प० १०सू० १ऋचि, एकं साम ।

तत्सवितुर्वरेणियोम् । भार्गो देवस्य धीमाही २ ।

धियोयोनः प्र । चो ऽ१२१ऽ२ । हुम् । आ२ ।

दायो । आ२३४५ ॥ ४ ॥

महानाम्न्यार्चिके सोपसर्गचतस्रिषु एकं साम ।

ए३ । विदामघवन्विदाः । गातुमनुशऽसिषः ।

दाशुया ३१ उवा २३ । ई३४डा । ए २ । शिक्षा

शचीनाम्पताइ । पूर्वीणाम्पुरू२ । वसा ३१ उवा २३ ।

ई३४डा । आभिष्टमभा २ इ । ष्टिभिरा ३१ उवा

२३ । ई३४डा । स्वर्णाऽशुरः । हा ३१ उवा २३ ।

ई ३४ डा । आ । चेतन प्रचेतया । इन्द्रा । द्युम्ना-
यना २ इयाई । इडा । इन्द्रा । द्युम्नायना २ इयाइ ।
अया । इन्द्रा । द्युम्नायना २ इयाई । इडा । एवा
हि शक्रो राये वाजाय वा १ ज्रो३वाः । शविष्ठ
वज्रिन्ना३ । जा साइ । मꣳहिष्ठ वज्रिन्ना२३ चो ।
जासा २१ उवा २३ । इट् इडा २३४५ । आया ।
हि पिब मा २ त्सुवा । इडा २३४५ । (१) । ए २ ।
विदारायेसुवीरियाम् । भुवो वाजानाम्पतिर्वेयाꣳ२ ।
अनुषा ३१ उवा २३ । ई३४डा । ए २ । मꣳहिष्ठ
वज्रिनृञ्जसाइ । यः शविष्ठः शूरा २ । णा ३१ उवा
२३ । ई ३४डा । यो मꣳहिष्ठो मघो ऽ२ । ना ३१
उवा २३ । ई ३४ डा । अꣳशुर्न शोचा २इः । हा
३१ उवा २३ । ई ३४ डा । चाई । किस्वो अभिनो

१ २ २ १ — १ १ १ २
नया । इन्द्रो । विदेतमू २ स्तु हाइ । इडा । इन्द्रो ।
१२ — १ १ १ २ १२ —
विदेत मूर्स्तुहाइ । अथा । इन्द्रो । विदेत मृ२ स्तु
१ १ २२ २ १ २ २
हाइ । इडा । ईम्रेहिमक्रास्त सूतयेहवा १ माइ
२ २१२ २ १ १
हाइ । जेतारमपरा ३ । जाइताम् । सनः स्वर्पदता
२ २
२३ होइ । हाइया ३१ उवा २३ । इट् इडा
१११ १ १२ १ — १
२३४५ ॥ क्रातूः । छन्दस्वता २ स्वृहात् । इडा
१११ १— १ २ २ १
२३४५ । (२) । ए२ । ईन्द्रस्यनस्य सा तयाइ ।
१२ २ २२ — १ २
हवामहे जेतारमपरा २ । जितमा २१ उवा २३ ।
२ २ १ — १ २ १ ५
ई २४ डा । ए २ । सनः स्वर्पदतिविषाः । सानः
— १ २ २ २
स्वर्पदता २ इ । द्विष आ२१ उवा २३ । ई३४ डा ।
१२ — १ २ २ २
पूर्वसयत्तआ२ । द्विव आ२१ उवा २३ । ई२४डा ।
२ १ २ ५ २ २
मघण्युर्मदाया २ । हा२१ उवा २२ । इ२४ डा ।
१ २ २ २ १ २ १ —
सु म आधेहिनोवसाउ । पूर्वाः । शविष्ठ शा२स्य

ताई । इडा । पूर्त्ती: । शवि० । यथा । पूर्त्ती: ।
शवि० । इडा । वर्गीड्डि शक्रो नूनन्तन्नव्यꣳ सा१न्या
३ साइ । प्रभोजनस्य वा ३ । वाहान् । समर्येषु
ब्रवा २३ होइ । वाहा ३१ उवा २३ । इट् इडा
२३४५ । शुरो । योगोपुगा २ क्रताइ । इडा ।
साखा । सुशेवो२ दयूः । इडा २३४५ ।(३)। आइवा ।
हियेवा २३४५ । होइ । हो । वाहा३१ उवा २३ ।
ई३४ डा । आइवा । हियग्ना २३४५ । होइ । हो ।
वाहा २१ उवा२३ । ई ३४ डा । आइवा । हिइन्द्रा
२३४५ । होइ० । आइवा । हिपूषा २३४५ न् ।
होइ० । आइवा । हिदेवा २३४५: । होइ । हो ।
वाहा २१ उवा २३ । ई ३४ डा ॥ ५ ॥

२ ॥ माधुच्छन्दसी संहिता ॥

"इदꣳह्यन्वोजसेति प्रथमोत्तमे त्वामिद्धि ह्वामहे नरः स पूर्व्यो महोनां पुराम्भिन्दुर्युवा कवि रपमच्चे मधुमति चियन्तः पवस्व सोम मधुमाꣳ ऋतावा सुरूपकृत्नुमूतये राहसं माधुच्छन्दस मेधा माधुच्छन्दसी नाम सꣳहितैतया वे देवाः स्वर्गंलोक मायन् स्वर्गंलोक मेति य एवं वेद" – इति सा॰ ब्रा॰ १।४।२६–२८॥ २॥

छ॰—२प्र॰ २प्र॰ ५द॰ १ऋचि,
गे॰—२प॰ ५प्र॰ १प्र॰ १०,१२ द्वे सामनि।

इदा६ मी। ह्याउ२नू चो १ जासा २। सुतꣳ राधा। नाम्पा३ता२इ। पिबातुवस्या गिर्वाणा२३४ः। पिबा ३४ तुवा ३। स्या२गा२३४ औहोवा। वा२ ३४णाः॥ १॥

इदꣳह्यानू६ चोजसा। सुतꣳ राधा। नाम्पाती। हो वा ३ हाइ। पिबातुव। स्यगाइर्वणो। होवा३ हाइ। पिबातु वौ। हो वा२ हा। स्यगायि ३ः। वा१ना२३४ औहोवा। घृतश्चुता २३४५ः॥ २॥

छ॰ ४प्र॰ १ध॰ १द॰ १०ऋचि, गे॰ २प॰ ८प्र॰ १ध॰ १३साम।

३र ४ ३र २ ३ ४र २ ५ २ १ २
त्वामिदा। होइ। हियो नरा ६ ए। अपीप्य

१ २ ३ ५ १ २ ३र २र
न्वा। ज्वा इनूभूर्णा २३४ याः। स इन्द्रस्तोम वाहसः।

१ २ ३र २ ३र २ १ २
इहाश्रुधा। औहो ३४ वा हाइ। उपास्वासा।

३र २ ३र २ १र २ १
औ हो ३४वाहा। रमागा२३ हा ३४३ इ। ओ

२३४५ इ। डा ॥ ३ ॥

छ॰ ४प्र॰ २ध॰ २द॰ ४ऋचि, गे॰ २प॰ ८प्र॰ २ध॰ १७साम।

५ र ४ र ५ ४र १ र
सपूर्व्यौमहोना६ मे। वेनः क्रतू३ भाइ रान

र २ २ ५ २ २ १ —
जे३। हा ३ हा। औ३हो३वा। आयिही २। यस्य

र ५र १ २ २ २ १ २ २
हा रा३मानुः पिता३। हा३हा। औ३हो३वा।

२ — १ २ २ २ २ ५
आयिही २। दायि वेपुधा३। हा३हाइ। औ३

२ ३ १ — १ २ २
हो३वा। आयिही२। य आ २३। ना २ जा २३४

५र १ २ १ ३ १११
औहोवा। मधुसुता २३४५ः ॥ ४ ॥

छ० ४प्र० २प० २द० ८ऋचि, गे० २प० ८प्र० २प० २१ साम।

१ र  १ २ ३ र २  १ र र २ १र
पुराभिन्दुर्युवाकविः । अमितौजा अजाया २१

२ १ र २ १ २ ३ ५
ता। आइन्द्रो विश्वा ३। स्याकर्मा २३४ णाः।

१ २ ३ ४ ५
धर्त्ता। वार्ज्रीया ओ २३४ वा। पुरुष्टुताः। हो ५

ड्डू। डा ॥ ५ ॥

छ० ५ प्र० २प० १द० ८ऋचि, गे० २प० १२प्र० १प० ७साम।

५ २ र २ १ २ ४ १
ओवा। उपप्रक्षेमधुमतिक्षियन्तः। ओवा। ओयि।

१र र र२ १ २ १ १
पुष्येमरयिन्धीमहेत आ २३ यिन्द्रा। ओ। वा।

२ २र २ ५
ओवा। ओ। वाहा २१ उवा २३। ऊ३४ पा ॥ ६ ॥

छ० ६प्र० १प० ४द० १०ऋचि, गे० ३प० १५प्र० २प० १५साम।

२५ ३ २ ३ २ १ ३ र
हाओ २३४ हा इ। इहा ३१। मवस्रसो। मा २

१ २ १ २ २ १र २ १
मधु। माए ऋ ता वा। यपोवसा। नो २ अधि।

२ १र ३ २ १ १र २ १ २ ३ ५
सानो अव्याइ। अवद्रोणा। नी २ घृत। अन्निरोहा।

२५ ३ २ ३ १ र २ १ २ १
हा ओ २३४ हा इ। इहा ३१। मदिन्तमो। म त्सरः।

२ २ ३
ष्पा २३१ इ। डा २ पा ५ ना ६५६: ॥ ७ ॥

छ० २प्र० २प० २द० ६ऋचि, भा० २प० ३प्र० २ख० ४ साम।

२ र १२१ १२र १२र १ १ — १२
सुरूपकृत्नुमूतये। सुदुघामा। वगो२। दुहया३

१ २ २ २ २ २ २र १
१उवा२३। इ२३४डा। सू२३४वाः। लुहूमा२३सी

१ २ १ २ १
द्यविद्यवियां३१उवा२३। ज्यो२३४तीः॥ ८॥

---

३ ॥ रुद्रसंहिता ॥

"भावीराजा तद्देवर्गं भाव्यदोहानि देवव्रतानि चैषा रौद्री नाम धण्डितेतां प्रयुञ्जन् रुद्रं प्रीणाति"—इति सा० ब्रा० १।४।२८,३०॥

छ० १प्र० २प० २द० ७ऋचि, गे० १प० २प्र० २प० ३ साम।

१र १र र ४ १ २ २ २ १ ४ ४ १ २र १
आभोराजा। नमध्वरस्यरुद्राम्। हो। ता। राम्।

२ १ १ २ ४ २ २ १
स। त्ययजा३म्। रोदसीयोः। अग्निम्पु। रा।

२ २ १ २ ४ १ ४ २ १ २ १
तनयि। लोरचित्तात्। हिरण्य। रू। पा३मव।

२ २ ४
सा३४३। यि। का३र्णूप्ध्वा६५६म्॥ १॥

छ० २प्र० १अ० ३द० १ऋचि, गे० २प० ३प्र० २अ० १-४पलादि ।

तद्वोहोवा । गाया२ । सुताइसा२३४चा । पुरु-
हूता । यसात्वा१ना२इ । शंयत् । हा । औ३होइ ।
गा२३४वाइ । ना२शा२३४औहोवा । ए३ । किने
२३४५ ॥ २ ॥

तद्वोगाया । सुताइसचा३ । पूरू२३हूता२३४ ।
हाहो२ । यासत्वा२३४नाइ । शं यन्ना२३वे । नयौ२ ।
हौ२ । हुवो२३४ । वा । कायूइनो६हायि ॥ ३ ॥

तद्वोगायसुतेसचा६ए । पूरुहूतायसत्वने । पुरु-
हूता । यासत्वा२३नो३४इ । शंयत् । गौवायौ२३४
षा । ना२३षा३ । का२३४५इनो६हाइ ॥ ४ ॥

तद्वोगायसुतेसचा६ए । पुरुहूतायसत्वनायि ।
शं यन्ना२३वे । ऐ२हो१या२३इयौ । नया२३ । का२
इना२३४औहोवा । ई२३४५ ॥ ५ ॥

छं० १प्र० २ऋ० २द० १ऋटचि, आर० १प० १प्र० २ऋ० १६-१८वीणि।

२र २र २ ४र५ २र१र
हाउ । १ । आज्यदोहम् । २ । मूर्द्धानन्दाइ ।
२ १र १ २ २ ४ ५ २र१र २१२
वा३भर । तिम्पृथिव्याः । वैश्वानराम् । ऋतआ ।
१र२र४५ २ १ २ १ २ ३ ४र
जातमग्नीम् । कविᳫसम्रा । जा३मतिः । थिद्धना-
५ २र१ २ १ २ ३ ४र५ २र
नाम् । आसन्नःपा । त्रा३श्चन । यन्तदेवाः । हाउ३ ।
१र ३ ४र५ २र ३ ४ २र
आज्यदोहम् । २ । आज्यदोभ्हाउ । वा । ए ।
२र १ २ १र २ १ २ १ १ १ १
आज्यदोहम् । २ । ए आज्यदोहा२३४५म् ॥ ६ ॥

२र २ १ २ १ २
हाउ । ३ । हूम् । चिदोहम् । चिदोहम् । २ ।
२१र २ १ २ ३ ४ ५ २र१र
मूर्द्धानन्दाइ । वा३भर । तिम्पृथिव्याः । वैश्वानराम् ।
२ १र १र२ ४ ५ २ १ २ १
ऋतआ । जातमग्नीम् । कविᳫसम्रा । जा३मतिः ।
२ ३ ४र५ २र१ २ १ २ ३ ४र१
थिद्धनानाम् । आसन्नःपा । त्रा३श्चन । यन्तदेवाः ।
२र २ १ २ १ २ ५
हाउ । ३ । हूम् । चिदोहम् । चिदोहम् । चिदो३
२ ३ १ १ १ १
हाउ । वा३ । ई२३४५ ॥ ७ ॥

देवेभ्योनमः । येदे० । अन्तरिक्षसदः । स्तते० । येदे० ।
पृथिवीषदः । स्तते० । येदे० । अप्सुषदः । स्तते० ।
येदे० । दिवुसदः । स्तते० । येदे० । आशासदः ।
स्तते० । अवज्यामिवधन्वनोवितेमन्युन्नयामसिसुहृतान्न
द्रुहश्वस्मभ्यम् । द्रुडा२३भा । यद्रुद्रंविश्वंभृतम् । यूयो३ ।
आउ । वा२३ । ना२३४माः ॥ ८ ॥

अधिय । ताद्रु । मित्रय । ताद्रु । क्षत्रय । ताद्रु ।
स्वःपताद्रु । धनपता२द्रु । ना२माः । नमउत्ततिभ्य-
श्चोत्तन्वानेभ्यश्चनमोनीयज्भ्यश्चोपवीतिभ्यश्चनमोस्य-
द्भ्यश्च । तिदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्च
नमः त्सरद्भ्यश्चत्सारिभ्यश्चनमःस्थि । तेभ्यश्चस्थायिभ्यश्च
नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेच-
विपथायच । अवज्यामिवधन्वनोवितेमन्युन्नयामसि

मृडतान्नद्रुहयक्षाय्यम् । इडा२३भा । यद्रदंविश्व-
भूतम् ॥युयो३ । आउ । वा२३ । ना२३४माः ॥१०॥
ऽअधिप । ताइ । मिचप । ताइ । चचप । ताइ ।
स्वःपताइ । धनपता२इ । ना२माः ॥ नमोन्नायन-
मोन्नपतयएकाचायचावपन्नादायचनमोनमः । रुद्राय
तीरसदेनमस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरि-
णेचनमस्त्रियस्वकायचक । पर्दिनेचनमआग्नायेभ्यश्च
प्रत्याग्नायेभ्यश्चनमःक्रव्येभ्यश्चविरिस्फेभ्यश्चनमःसहतेच-
विहतेच । यवज्यामित्रधन्वनोवितिमन्युन्नयामसिमृड
तान्नद्रुहयक्षाय्यम् । इडा२३भा । यद्रदविश्वभू-
तमः । युयो३ । आउ । वा२३ । ना२३४माः ॥११॥

## ४ ॥ विष्णुसंहिता ॥

"इदंविष्णुः प्रथमस्तथ्यः प्रकाश्यमुमनेवनुवाच-इति वाराह मन्त्य पुरुषमते चेषा वैष्णवी नाम संहितैतां प्रयुञ्जन् विष्णु मैयाति"-इति सा० ब्रा० १।४।२१,२२।

छ० ३प्र० १च० ३द० ८पाठि, गी० २प० ६प्र० २घ० १४ साम।

इदा६मे। विष्णूरः। विचक्रा२३४माइ। ताइ-
धानि। दधाइमा१दा२म्। समूर२हो१। ढा२३मा३।
स्या२मा२३४औहोवा। प३। सुले१॥ १॥

धा०-१प्र० ३द० ८कठि, धार० ३प० ४प्र० २च० ७ साम।

हाउ।३। ऊर२।२। ऊ२२। वा३। हाउवा३। इसुइहस्।
ष्वर्धिःघोषिस्तमोएटः। प्रनस्वहष्योअरुयस्वनूमा२३
हाः। प्रनोवचोषिद्याजातवेदा२३साइ। वैश्वा-
नरायमतिर्नव्यसेशु२३चीः। सोमइवपवतेचारुरग्ना-
२३याइइ। हाउ। ३। ऊर। २। ऊ२२। वा३।
हाउया३। ई२३४५॥ २॥

छ॰ ६प॰ १य॰ ४द॰ २ऋचि, गी॰ ३प॰ १५म॰ १य॰ ३६साम।

२र २ १ २१र २१र २२
हाउहाउ। हुम्। प्रकाविया्म्। उशने। वब्रु-
४ ५ २र१र२ १ १ २र ३ ४ ५ २ १
वाणः। देवोदेवा। नाउ३ज्ञनि। माविवक्ती। महि-
१ २ २ ३ ४ ५ २र र १
व्रताः। शुचिवा३। धुःपवाकाः। हाउहाउ। हुम्।
१ १र २ १ २ २ ४
पदावरा। हो३अभि। आ३४३यि। तो३रा५ं इ
भा६५ ६न्॥ ३॥

षा॰ ४द॰ १-२ ऋचु, पार॰ ५प॰ १म॰ ११-१०पञ्चसामानि।

२१ २ १ र र २
उहुवाहाउ। ३। सहस्रशीर्षाःपुरु२३षाः। सह-
र १ २१ २ १र २१र २
स्राक्षःसहस्रा२३पात्। सभूमिएसर्वतोवा२३र्त्वा।
१ २१र २ १ २ १ ५
अत्यतिष्ठद्दशाङ्गू२३लाम्। उहुवाहाउ। २। उहुवा३
२ १ १ १११
हाउ। वा३। इट्इडा२३४५॥ ४॥
२१र र — र १र र र २
उहुवौहोवा२। ३। त्रिपादूर्द्ध्व उदैत्पुरु२३षाः।
१र र र र २१ २ १र ११ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।

अशनानशनेश्रा२३भी । उद्धुवौहोवा२ । २ ॥ उहुवौ । होर । वा२३४ । औहोवा । ई२३४डा । उहुवौहोवा२ । २ । उहुवौ । होर । वा२३४ । औहोवा । सु२३४वा: । उहुवौहोवा२ । २ । उहुवौ ॥ होर । वा२३४ । औहोवा । ऊ२३४५ ॥ ५ ॥

[illegible]

। डुयौहोवा२ । ३ । पुरुषएवेद१५सा२३र्वम् । यद्भूतंयच्चभावा२३याम् । पादोस्यसर्वाभूता२३नी । त्रिपादस्यामृतन्दा२३इवौ । डुयौहोवा२ । २ । डुयौ । होर । वा२३४ । औहोवा । ई२३४डा । डुयौहोवा२ । २ । डुयौ । होर । वा२३४ । औहोवा । ज्यो२३४ती: । डुयौहोवा२ । २ । डुयौ । होर । वा२३४ । औहोवा । ई२३४५ ॥ ६ ॥

२र १र र २ १ २ २र
हाउ ।३। तावानस्य । महा२३इमा२ । हाउ ।३।
१र र र २१र १ २र १र र
ततोज्यायाᳪश्चपूरु२३षा२: । हाउ ।३। उतामृतत्वस्ये
र २र १ र र २१र र
शा२३ना२: । हाउ । ३ । यदन्नेनातिरोहा२३ती२ ।
२ ऽ २ ४ १ ११११
हाऽउ । ३ । वा३ । ईट्इडा२३४५ ॥ ७ ॥
२ ऽ १ र २१र २र २ऽ
हाऽउ३वा । ततोविराडजायत । हाऽ३उवा ।
१र २र १ २१र र २ ऽ १ २र १र र
विराजोअधिपूरुषः । हाऽउ३वा । सजातोअत्यरि
२ ऽ १र र २ १ र २ १ १ ऽ २
च्यत । हाऽउ३वा । पश्चाद्भूमिमथोपुरः । हाउवा३ ।
२११११
इ२३४५ ॥ ८ ॥

छ० २प० २प० १द० ५ऋषि, पाद० १प० ५प० १प० १८ साम ।

२र १२ १ १ १ २ १ २
हाउ । ३ । अभीनषिन् । ३ । न्टस्पाद्भन्टरणम् ।
१ २ २र १ २ —
३ । निधाइमाहे । ३ । कयानश्चिचा३आभू१वा२त् ।
२र र र १ २ ० — २ र १ २
ऊतीसदावृ३धा:सा१खा२ । कयाशचिष्ठा३यावा१र्त्ता
२र १ २ १ २ १ २
२३ । हाउ । ३ । अभीनषिन् । ३ । न्टस्पायि

न्त्वाम । ३ । निधाद्माहि२ । निधा२३इ । मा२ ।
हा२३४ । औहोवा । सुवर्ज्योती२३४५ः ॥ ९ ॥

---

## ५ ॥ विनायकसंहिता ॥

“अदर्दः सुत्सासास मातृन इति वर्गा मध्यमानःसुहस्त्येति प्रथम-मह्ने चैषा वैनायकी नाम सप्तहितेता प्रयुञ्जन् विनायकं प्रीणाति”—इति सा० ब्रा० १ । ४ । २३,२४ ।

छ० ४प्र० १ध० ३द० ९ऋचि, गी० २प० ८प्र० १ध० ३,४ द्वे सामनी ।

अदर्दृत् । समसृजोविश्वानित्वमर्णा२३४वान् ।
वद्बधानाऽ२श्ररम्णाः । महान्ता२३४मीम् । द्रपर्वत
वियाद्धः । सृजाद्धा२३४राः । अवयद्दान । वा२३
हा२३४म् । औ२३४५ई । डा ॥ १ ॥
अदर्दृत्समसृजाः । विश्वानि । त्वमर्णवान्बद्ब
धानाऽ२श्ररा२३म्णाः । महान्तामिन्द्रपर्वतंविया२३द्धाः ।

छ० २प्र० २ग्र० २द० ३ऋचि, गे० २प० ५प्र० १ग्र० १६–१८सा०।

आतूनया। द्रच्युमा२३न्तास्। चादुचंग्राभा२३ए
हाइ। संगृ२भाया। महाहस्तो२३४हाइ। दचा२
यिणाइना। महा२३। हा२सा२३४औहोवा।
दचिणे३ना२३४५ ॥ ५ ॥

आतूनइन्द्रच्युमान्ताम्। चित्रा२इग्रा२३४भाम्।
संगृभा२३४या। सा३हा३। हा२सा२३४औहोवा।
दचिणेना२३४५ ॥ ६ ॥

आतूनइ। द्रच्युमा६न्ताम्। चित्रंग्राभ५संगृभा२
या। चित्रंग्राभ५सम्। गृ। औ३होइ। भा२३४या।
ऐहोइ। महाहस्तीदचा२३होइ। औहो। वाहो२३४
वा। णापूयिनो६हाइ ॥ ७ ॥

आतूनइन्द्रक्षुमा६न्ताम् । चित्रंग्राभ०संगृभाया ।
चित्रंग्राभ०सम् । गृ२३ । इ३४५हा । आ२३४या ।
ऐहोइ । महाहस्तीदक्षा२३होइ । औहो । वाहो२३४
वा । या५इनो६हाइ ॥ ८ ॥

छ० १प्र० १ख० ३द० ७ऋचि, गे० ३य० १५प्र० १ख० ६,११ दि ।

मृज्यमानाः । सुहस्तिया३ । सामु३द्राइवा ।
चमिन्वसा३इ । रायीश्म्पाइशा । गंवहुला३म् । पुरु२
स्पृ२३४हाम् । पवमाना । औ३हो । भियो२३४वा ।
यायुसो६हाइ ॥ ९ ॥

मृज्यमाना५ःसुहस्तिया । समु३द्राइवार । चमा२
यिन्वासो२ । रयिम्पिशङ्गम्बहुलम्पुरुस्पृहा । औ३हो ।
पवमा२३ना३ । भियो२३४वा । या५सो६हाइ ॥ १० ॥

## ६ ॥ स्कन्दसंहिता ॥

"आमन्द्रैरिन्द्रहरिभिरानोविश्वासुहव्यमसेनानीरिति वर्गाः पवित्रम् इति ह यथा स्कन्दस्य सऽहितैता प्रयुञ्जन् स्कन्दं प्रीयाति"-इति सा० ब्रा० ४ । १ । १५, १६ ॥

ह्र० ३प० २च० १द० ४स्कंदि, गे० २प० ६प्र० २च० २७-२८सा० ।

१र २ २ २ २ १ २
आमन्द्रैरा। द्रहरिभाइर्याहिमयूरा३रोमाभा३इः।
३ ५ ३ ५ १ २ ५ २र १
मा्लाकाद्रचीत्। नियेमू२३४रीत्। नयाश्विनाः।
२ १ — १ १ २ ५र २
अतिधान्वे२। वताए२३। आ२इहा२३४औहोवा।
२ ५
वा३३४याः ॥ १ ॥

१र५ १र ५ ३ ३ २र १ २१र
आमन्द्रैरिन्द्र। हापूरिभायिः। याहिमयू२ररोम
१र २ २ १ २ २
भाइः। मा्लाका२३३चीत्। नाइयेमुरित्।
१र २ १ २ १
नयाश्वा२३इनाः। अताइधा२३न्वे। वताए२३।
१ २— २र २ २ १ १११
आ२इहा२३४औहोवा। वयो३मी२३४५ः ॥ २ ॥

आमन्द्रैरिन्द्र। हापूरिभीः। याहिमयूऽररोम

भाउ। वा२। माल्वा२। केचिन्नियेमुरिन्नपाशिनाउ।

वा२। आती२। धन्वेवता३१उवा२३। ई२३४

हौ॥ ३॥

छ० ३प्र० २प० ३द० ७ऋचि, गे० २प० ७प्र० २प० ७-८सामानि।

आनः। एविश्वा। सुहाव्या२म्। आइन्द्र९सम।

त्सुभू१पाता। ऊ२३४पा। हा३हाइ। ब्रह्माणि

सवना। निहचहान्। परमा२३ज्याः। आर्चा३हाइ।

पमा। औ३होवा। होपूइ। डा॥ ४॥

आनोविश्वासुहाहाव्याम्। इन्द्र९समत्सुभूपतो।

पब्रा२३ह्मा। णिसवना। निवृनहान्। परमा२

३ज्याः। आर्चा३हाइ। पमा। औ३होवा। होपूइ।

डा॥ ५॥

५र र १ र २ ५ २ र
आनोविश्वासुहाव्याम् । इन्द्राम् । समत्सुभू
१र २ २ १ २
पत । उपाव्राश्हार । णिसवनानिवृत्रहन् । परामा
२उ १र २ १
१ज्या२ः । पटचोपा२३मा२४३ । धो२३४५इ ।
डा ॥ ६ ॥

छ० ६प्र० १भ० ५द० १ऋचि, गी० ३प० १५प्र० २अ० १६–१८ ।

२ ५ २ १ ४ ५ २ १र२र १ १र र
होश्वा । उहुवा३ । होवा । प्रसेनानाइः । शूरो
२ २ ३ ४ ५ २ १र १ २
आ३ । आइरथानाम् । गव्यन्नेताइ । हर्षता३इ ।
२ २ ४ ५ २ १र २ १ २ २ २ ४
अस्यसेना । भद्रान्कृण्वान् । इन्द्रहा३ । वांत्सखि
५ २र १र २र १ २ १ २ ३ ४ ५
भ्याः । आसोमोवा । स्वा३रभ । सानिंदत्ताइ ।
२ ५ २ २ २ ५ ५
होश्वा । उहुवा३ । होवा६ । हाउवा ॥ ७ ॥

५र ४ २ १ १ १ २ १र ५ १र ४ २ १ १ १
औहो३वा३४५ । प्रसे०—०स्याः । औहो३वा३४५ ।
२र १र २र १ २ १ २ २
आसोमोवा । स्वा३रभ । सा३४३ । नी२दा५त्ता६५६यि ॥८

१र ७ २ १११ २ र २र १ १र ७ २
औहो३वा३४५। असेनानाइः। शूरो३आ२।
२ ३ ४ ५ २ ३र १ १ २ २ २ ३ ४ ५
याग्निरथानाम्। गव्यन्नेताइ। हर्षता३यि। अस्यसेना।
३ र २ १ १ २ २ २ ४ ५ १र ७
भद्रान्क्षणवान्। इन्द्रहा३। वांवखिभ्याः। औहो३
५ १ १ १ २र र २र १ २ १ २ २
वा३४५। आसोमोवा। स्वा३रभ। सा३४३ः। नी३
७ २ १ १ १ १
हा५। ता२३४५म्॥ ८॥

छ० ६प० २अ० २द० १२स्तुति, गी० ३प० १४अ० २अ०, १४, १५।

२ १ २र १ २ १ २१ १ १ र
पवित्रन्तेविततम्ब्रह्मणस्पते३। हुवे२३। २।
१ २ २ २ १ र २र १ २र १
होवा३हा३। हाइ। प्रभुर्गात्राणिपर्येषिविश्वता२३ः।
१ १ १ र१ ५ ५ १र २ १ ३ १र
हुवे०। अतप्ततनूर्नतदा२मोअश्नुते३। हुवे०। शृता
२१ २ १ र१ १ १ २
सइद्वहन्तःसन्तदा२शत। हुवे२३। २। होवा३
२ २ २र र २ १र र र र ५ १र
हा३। हा३४। औहोवा। अर्कोदेवाना२म्परमे
र५ १ १ १ १ १
वियो२मा२३४५न्॥ १०॥

२ १ २र १ २ १ २ १ २र १
पविचन्तेविततंब्रह्मणस्पते३ । हुवाइ । औहो
१ १ २ १ १र २
वा२ । प्रभु० । हु० ॥ अतप्त० । हु० । शृतास० ।
२ २र १ २ २र २ २ १ २
हुवायि । औ । हो२ । वा२३४ । औहोवा । धर्मस्य
२१र १ १र ५ १ १ १
देवाःपरमेवियो२मा२३४५न् ॥ ११ ॥

---

॥ पितृसंहिता ॥

"यद्राजविश्पतिः समाद्‌ग्नेयमीमदन्तञ्मभिविष्ट मर्मा-
सत्‍द्रः कनिक्रन्तीति ह एवा पित्रा नाम संहितैतां प्रयुञ्जन्
पितॄन् प्रीणाति"—इति सा० ब्रा० १ । ४ । १७,१८ ॥

छ० २र्प० १प्र० २द० दशति, गे० १प० ३प्र० १र्च० २८ साम ।

२ १र ४ ५ १ २ २र १ २र १र
यद्राज२३विश्पतिःशिताः । सुप्रीतोमनुपोविशे ।
१ २ १ २र १२र३ २ २ १ १ २ ४ ५
विश्वांइदा२३ग्नोः । प्रतिरचां । सिसेधतां । औ३होवा ।
५
हो५इ । डा ॥ १ ॥

छ० १प्र० २अ० ३द० ८ऋचि, गे० १प० ३प्र० १अ० १८साम ।

अहा । वो३हा । वो३हा । सनादग्नाइ ।
मृणासि । यातुधानान् । नत्वारक्षा । सी३पृत ।
नासुजिग्यूः । अनुदहा । सहमू । रान्क्रयादाः ।
अहा । वो३हा । वो३हा । माताइहैत्याः । सुचत ।
दा३४३इ । वी३याप्याइ५६ः ॥ २ ॥

छ० ५प्र० १अ० ३द० ७ऋचि, गे० २प्र० ११प्र० १अ० २८साम ।

अग्नन्नमीमद । तही३ । आ२३४ । अप्रियाअधू ।
षता । अस्तोषतस्वभानवः । विप्राना२३वी । छाया
मती । योजानूइवा३इ । द्रा२ता२३४औहोवा ।
हा२३४री ॥ ३ ॥

छ० ६प्र० १अ० ४द० ६ऋचि, गे० ३प० १५प० २अ० १०साम ।

ओ३हाइ । ओ३हा । ओहा । इया२ । ओ३

२ २ १ १ २ १ ३ ३ ४ ५
हा३ए। अभिविपा। हा३०हय। गांवयोधाम्।
२ १र २ १र २ ३ ४ १ १ २र
धर्त्तोपियाम्। अवाव। मन्तवाणी:। वनावसा।
२ १ २ १ ४ ५ २ १ ५ २
नो३वत। योनसिन्ध:। ओ३हाइ। ओ३हा।
१र २ १ ५ २ २ १ १ १र
ओहा। इया२। ओ३हा३ए। विरलधा:। इयते।
२ २
वा३४३। रो३यापुणा६५६यि ॥ ४ ॥

छ० ६प्र० १अ० ४द० ७ऋषि, गी० ३प० १५प्र० २प० ११साम।

१ १ २र १ २ १र २ ३
हो। होइ। अक्रांत्समुद्र:प्रथमेविध। मान्।
२ ३ २ १र २ र १
हो। होइ। जनयन्प्रजाभुवनस्यगो। पा:। हो।
२र १ २ र १ २ १ र र १
होइ। हषापवित्रेअधिसानो२अ। व्याइ। हो। हो।
२ १ र २ र र र २ र २ र र
वृहत्सोमो२वाहधे। स्वानोअ। द्रा। औ३होवा
२ २ २र १र १ १ १ १
हाउवा३। ए३। स्वानोअ। द्रो२३४५। ॥ ५ ॥

छ० ६प्र० १अ० ४द० ८ऋषि, गी० ३प० १५प्र० २अ० १२, १३ हे।

४ ५ १ —१ — र १
क्रानी। क्रान्ती२क्रान्तीर। हरिरासृज्यमा२३

२ ५ १ १ — १ — २ १
ना३: । साड्दान् । वाना२वाना२ । स्वजठरेपुना२३

२ ४ ५ १ — १ — २ १
ना३: । नृभी: । याता२याता२ । कृणुतेनिर्णिजा२३

१ ५ १ — १ — १
ज्ञा३म् । याता: । मातो२मातो२म् । जनयता२३ ।

१ २ ३ १२ २ ३ ११११
स्वा२धा२३४औहोवा । भी२३४५: ॥ ६ ॥

१ ५ २ २ १ २ ३ २ २ १ ५ २
कनिक्रन्तिहा । होइ । हरिरासृज्य । मा२३४

१२ १ २ २ ३ १ ३ २ १
ना: । हाहोइ । सीदन्वनस्यजठरेपुना२३ना: । हाहोइ ।

१२ २ ३ १ २ २ ३ २
न्टभिर्यत:कृणुतेनिर्णिजा२३ज्ञाम् । हाहोइ । यतो

० ३ २ १२ २
मताइम् । जनयता२३ । स्वा२धा२३४औहोवा ।

३ ११११
भी२३४५: ॥ ७ ॥

सामश्रमीत्युपनामावसयश्रीसत्यव्रतशर्म्मसङ्कलितं
संहितासप्तकं समाप्तम् ॥

## ॥ अथ बृहद्यज्ञपाठः ॥

---

॥ तत्रेदं गोभिलीयं सूत्रम् ॥

"भासं दशस्तोभ मुन्नयं गायत्रौशामौशनसं शुद्धाशुद्धीये राजनरौहिणके बृहद्रथन्तरे पुष्कलमिमे हानाम्नी महादिवाकीर्त्यं ज्येष्ठसामानि देवव्रतानि पुरुषव्रतानुगानं तवश्रावीय मादित्यव्रत मेकविंशत्यनुगानं पर्वाद्यावारभ्य यथा शान्तदहरक्तौ छन्दयज्ञा-येति गोभिलीया गोभिलीयाः"—इति गो॰ ब॰ सू॰ ॥ १ ॥

ॐ३म्। भासस्य वायुर्जगती सूर्यः।
दशस्तोभस्य प्रजापतिस्त्रिष्टुबिन्द्रः।
उन्नयेत्यस्य आदित्योऽनुष्टुबात्मा।
गायत्रस्य पुष्कलो गायत्री सविता।
औशनसस्य उशना गायत्री अग्निः।
शुद्धाशुद्धीययोरिन्द्रोऽनुष्टुबिन्द्रः।
राजनरौहिणयोरिन्द्रस्त्रिष्टुबिन्द्रः।
बृहत्साम्नो भरद्वाजो बृहतीन्द्रः।
रथन्तरस्य वसिष्ठो बृहतीन्द्रेशानौ।
सेतुसाम्नो विश्वोकस्त्रिष्टुबात्मा।

महानाम्नीनां प्रजापतिर्विराडिन्द्रः पुरीषपदानां पदपंक्तिर्वा ।
महादिवाकीर्त्यस्य सूर्यो जगती सूर्यः ।
ज्येष्ठसाम्नां प्रजापतिस्त्रिष्टुबग्निः ।
देवव्रतानां देवा उत्कृती रुद्रः ।
पुरुषव्रतानांपुरुषोऽनुष्टुप्पञ्चानांगायत्र्यग्निमात्मा ।
तवश्यावीयसाम्नः प्रजापतिर्गायत्री सविता ।
सत्वाभूतानीति विश्वेदेवास्त्रिष्टुबादित्यः ।
सर्वोचित्रंदेवा सन्तथरति चादित्यस्त्रिष्टुप् गायत्री सूर्यः।
उत्तरयोरादित्यो गायत्री सूर्यः ।
उदुत्यंचित्रमित्यतोपश्चस्य सूर्यस्त्रिष्टुप् गायत्री सूर्यः ।
सधस्थस्य इन्द्रोऽनुष्टुप् सूर्यः ।
महतां भूतो गायत्री सूर्यः ।
सार्पराज्ञीनां प्रजापतिर्गायत्री सूर्यः ।
घर्मरोचनस्येन्द्रोऽनुष्टुप् सूर्यः ।
परिधीना मिन्द्रो गायत्री सूर्यः ।
ऋतुसाम्न ऋतवोऽनुष्टुप् सूर्यः ।
चक्षुःसाम्नो मित्रावरुणौ गायत्री सूर्यः ।
श्रोत्रसाम्नो मित्रावरुणौ त्रिष्टुप्गायत्र्यौ सूर्यः ।
शिरःसाम्न इन्द्रो गायत्रीत्रिष्टुभौ सूर्यः ।
जपे विनियोगः ॥

१० भासम्॥ आ० ३,८। आर० ६,१,८॥

२र १ र४ ३१ २र४ ३१ २र १
हाउहाउहाउ। ओहा। २। ओहाइ। इ
१ २र २ १ १ १
हौहो। ३। इहियों। ३। हुम्। ३। हो। ३।
१ १र २ १र १
इ। ३। इडा। ३। स्ततमे। ३। इस्। ३।
२१ र २१र २ १र र र र २
प्रचक्षपष्योऽश्वरूपस्यनूमार२३हाः। प्रनोवचोविदथाजात
१र २ २र र १र २ १र २
वेदा२३साइ। वैश्वानरायमतिर्नव्यसेशू२३चौः।
१र र र २१ २ २र र २र४
सोमइवमवतेचारुरग्ना२३या३इ। हाउहाउहाउ।
३१२र४ ३र ३र १ र २र २ १
ओहा। २। ओहाइ। इ हौहो। ३। इहियो। ३।
१ १ १ १ र २१र
हुम्। ३। हो। ३। इ। इडा। ३। स्ततमे। ३।
१ २ ३र र १ र २र २१
इस्। ३। हा२३४। औहोवा। इ हौहो। भद्रम्।
१ र २र १र२ १ र २र २र१ १ र २र
इ हौहो। श्रेयः। इ हौहो। वामम्। इ हौहो।
१२ १ र २र १ १ र २र १ २ १ र २र
वरम्। इ हौहो। सुवम्। इ हौहो। अस्ति। इ हौहो।
१ र २र १ र २र १र २ र र
अभाजीत्। इ हौहो। ज्योतिः। अभाजीत्।

१ २ २र १र २ १ ३ र२
इ हौहो। दौदिवः। ए२३। हियाहाउवा३।
१ १११
भा२३४५स॥ १

२ । दयस्तोभम् । छ० ४,१,९,६ । धार० ४,२,११ ॥

१र र र २र २र १र २र २र१र र
हाउहाउहाउ। भोहा। २। भोहा। हाभोवा।
२र १र १र
३। ऊ२। ३। भो२। ३। हाउवाक्। ३। आयुर्यन्
२र र १र १
। ३। एभायुः। ३। आयुः। ३। वयाः। २। वयः।
१ र र र —१ र र र
इन्द्रन्नरोनेमधिताहवा२न्ताई। यत्पार्यायुनजतेधिया
—१ र र र र —१ र र
२साः। शूरोन्टपाताश्रवसश्चका२मायिं। आगोमति
र र —१ २र र र १र २र
व्रजेभजातुवा२न्नाः। हाउहाउहाउ। भोहा। २।
१र२र १ १
भोहा। (पूर्ववत्)। वयाः। २। वा२। या२३४।
१र र १र र १र २१ २र १र र१ ११११
भौहोवा। ए। आयुर्धाअस्मभ्यंवर्चोधादेवेभ्या२३४५ः॥२

२ । उन्नयम् । स्तो० २,१० । धार० ६,२,२२ ॥

१ १र १ २र १ र १ २ १
उन्नयामि। होइ। ३। आदित्यंग्राभ्णंयन्तमुन्न

यासि । होइ । ३ । अहोरात्राख्यरिचाणि । होइ ।
३ । द्यौर्नहौउ । ३ । तस्यामसावादित्यईयतेहाउ
। ३ । तस्मिन्वयमीयमानईयामहेहाउ । ३ । ईयामहे
हाउ । २ । ईयामहे३ । हाउवा । प्रियधामछस्तियचरे
। २ । प्रियधामछस्तियचरे२३४५ ॥ ३

४ ॥ गायत्रीसाम ॥ छ० ६,२,१०,१ । चतुर्भ्येभ्यः पृथक् ॥

तत्सवितुर्वरेणियोम् । भार्गोदेवस्यधीमाहीर२ ।
धियोयोनःप्र । चोऽ१२१ऽ२ । हुम् । आ२ । दायो ।
आ२३४५ ॥ ४

५ ॥ श्रीमनसम ॥ छ० १,१,१,५ । गी० १,१,८ ॥

प्रेछंवाः । अता२३इथीम् । स्तोपेमिवम् ।
इवमा२३याम् । अस्मादरा२था३म् । नावा२३हा
३४३यि । दा२३४यो६हाइ ॥ ५

६, ॥ शुद्धाशुद्धीये ॥ छ० ४,२,१,८ । गी० ८,१,७-८ ॥

एतोन्विन्द्रꣳस्तवामा । शुद्धꣳशुद्धेनसा२३म्ना । शुद्धै
रुक्थैर्वावृध्वा२३ꣳसाम् । शुद्धैरा२३शी३ । वा२न् ।
ममा३४औहोवा । तू२३४५ ॥ ६

एतोन्विन्द्रꣳस्तवा६मा । शुद्धꣳशुद्धे । न । साम्ना२ ।
शुद्धाइरू३क्था२यिः । वावा२र्ध्वा२३४ꣳसाम् । शुद्धै
रा२७शी । वांमामत्तु । इडा२३भा३४३ । ओ२३
४५इ । डा ॥ ७

८ ॥ राजनम् ॥ छ० ४,१,२,६ । आर० ४,२,१८ ॥

हुम् । ३ । हो । ३ । हए । ३ । ओहा । २ ।
ओहा । औहोइ । २ । औहोइ । इन्द्रन्नरो । ने३
मधि । ताहवन्ताई । ३ । वयोवृहत् । ३ । विभ्राष्टये
विधर्मणे । ३ । यत्पारियाः । युनज । ताइधियस्ताः

२ १ र १ २र १र

। ३ । सत्यमोजः । ३ । रजःसुवः । ३ । शूरोन्पषां ।

२ १ २, ३ ३र २ २ १ र २ १र

ता३श्रव । सश्वकामाइ । ३ । भद्रं॒सुधा । २ । भद्रं॒

र १ र १ र २र १र

सुधे । पमूर्जम् । इषमूर्जम् । २ । आगोमताइ ।

२ १र १र, २ ३ ४ २ १ २ १ २

व्रजेभ । जातुवन्नाः । ३ । वृहद्यशः । ३ । दिविद्धे३

१ २ १ २ २ १र र र र र र१३

हस् । २ । दिविद्धे३ । हाउवा । वागीडासुवोवृहन्ना

१ १ १ १

२३४५ः ॥ ८

८ ॥ रौहिणम् ॥ छ० ४,१,३,६ । आर० ४,२,२० ॥

२र १ २ १ २

हाउ । ३ । आईषी । ३ । आइहिया । ३ ।

१ २ १ २ १ २ १

आसाउ । ३ । आयाम् । ३ । नामाः । ३ । किट् ।

१ र र र —१ र र र

२ । इन्द्रन्नरोनेमधिताहवा२न्ताई । यत्पार्यायुनजते

—१ र र र र —१ र र

धिया२स्ताः । शूरोन्पाताश्रवसश्चका२माथि । आगो

र र —र १ १ र

मतिव्रजेभजातुवा२न्नाः । मना२३होई । प्राणा२३

१ १ र १ र

होइ । चचू२३होई । श्रोत्रा२३ऽहोई । घोषा२३

होइ । व्रता२३ऌहोइ । भूता२३ऌहोइ । माना२३ऌ
होइ । चित्ता२३ऌहोइ । धीता२३ऌहोई । सुवा२३
होई । ज्योता२३इर्होर् ॥ वा२३४ । औहोवा ।
ऊ२३४५ ॥ ९

१० ॥ बृहत् ॥ छ० ३,१,५,२ । आर० १,१,२० ॥

औहोइत्वामिद्धिहवामहा३ए । सातौवाजा । स्या
कारा२३४वाः । तुवा३४ । औहोवा । हवाइयुवाई ।
द्रासा३१त् । पतिन्ना२३४राः । त्वाङ्काष्ठा३४ ।
औहोवा । सु२श्वर्वा२३४ । ताः । वहुवा३हाउ ।
वा । इस् ॥ १०

११ । रथन्तरम् । छ० ३,१,५,१ । आर० २,१,२१ ।

माभित्वाशूरनोनुमोवा । मादुग्धाइवधेनवईशान
मस्यजगतः । सुवा२३र्दृशाम् । माइशानमा२३

द्रा२ । तास्यू२३४पा । ओवा६ । हाउवा ।
अस् ॥ ११

१२ ॥ पुरुषगतिः ॥ आ० १,८ । आर० २,२,३४ ॥

हाउ । ३ । सेतूँस्तर । ३ । दुस्त । रान् । ३ ।
दानेनादानम् । ३ । हाउ । ३ । अहमस्मिप्रथमजा
ऋता२३स्या२३४५ । हाउ । ३ । सेतूँस्तर । ३ ।
दुस्त । रान् । अक्रोधेनक्रोधम् ।२। अक्रोधेनक्रोधम् ।
हाउ । ३ । पूर्वन्देवेभ्योअमृतस्यना२३मा२३४५ ।
हाउ । ३ । सेतूँस्तर । ३ । दुस्त । रान् । ३ ।
श्रद्धयाश्रद्धाम् । ३ । हाउ । ३ । योमाददातिसइदेव
मा२३वा२३४५त् । हाउ । ३ । सेतूँस्तर । ३ ।
दुस्त । रान् । ३ । सत्येनानृतम् । ३ । हाउ । ३ ।
अहमन्नमन्नमदन्तमा२३द्मी२३४५ । हाउहाउहाउवा ।

२

२र १र २र १ २ १ १ २
एषागतिः । ३ । एतदमृतम् । ३ । स्वर्गच्छ । ३ ।
१र २ १र र २र १र २ १ १ १ १ १
ज्योतिर्गच्छ । ३ । सेतूꣳस्तीर्त्वाचतुरा२३४५ः ॥ १२

१३ ॥ महानाम्न्यः ॥ मूलमस्य छन्दआरण्यकोत्तरेभ्यः पृथक् ॥

१ १ — २ १र २ १ २र १
॥ ॐ३म् ॥ ए२ । विदामघवन्विदाः । गातुमनु
१ २ २ ५ १ —
शꣳसिषः । दाइशा३१उवा२३ । ई३४डा । ए१ ।
१ र २ र र १ २र र १र — १ २
थिशामघोनाम्यताइ । पूर्वीणाम्पुरु२ । वसा३१उवा
२ ५ २र १ — १ २
२३ । ई३४डा । आभिष्टमभा२इ । ष्टिभिरा३१
२ ५ १ र ६ १
उवा२३ । ई३४डा । स्वर्णाꣳशूरः । हा३१उवा२३ ।
२ ५ १ २र र १ २ २ १र —
ई३४डा । माचे । तनप्रचेतया । इन्द्रा । द्युम्नायना२
१ १ १ २ २ १र १ १ २
इषाइ । इडा । इन्द्रा । द्युम्ना० । स्वधा । इन्द्रा ।
२ १र १ १र र र र र र र २ १
द्युम्ना० । इडा । एवाहिशक्रोरायेवाजायवा१ज्री३
२ १ २ २ ४ ५ १
वाः । शविष्ठवज्रिन्ना३ । ऋञ्जसाइ । मꣳहिष्ठवज्रि

न्ना२३हो । जासा३१उवा२३ । इट्इडा२३४५ ।
घाया । हिपिबमा२त्सुवा । इडा२३४५ ॥—
ए२ । विदारायेसुवीरियाम् । भुवोवाजानाम्पति
वंशाए२ । अनुआ३१उवा२३ । ई३४डा । ए२ ।
मꣳहिष्ठवज्रिन्नृञ्जसाइ । यःशविष्ठःशूरा२णा३१उवा
२३ । ई३४डा । योमꣳहिष्ठोमघो२ । ना३१उवा२३ ।
ई३४डा । अꣳशुर्नशोचा२इ । हा३१उवा२३ ।
ई३४डा । चाइ । किलोअभिनोनया । ईन्द्रो । विदे
तमू२स्तुहाइ । इडा । ईन्द्रो । विदेतमू२स्तुहाइ ।
चथा । ईन्द्रो । विदेतमू२स्तुहाइ । इडा । ईशेहियक्
स्तमूतयेहवा१मा३हाइ । जेतारमपरा३ । जाइताम् ।
सनःस्वर्षता२३होइ । हाइया३१उवा२३ । इट्इडा
२३४५ । क्रतूः । छन्दऋता२म्बृहात् । इडा१२३४५ ॥

१— १ २ ५ १ १८ ८ ८ ८
ए२ । इन्द्रन्धनस्यसातयाइ । हवामहेजेतारम
— १ २ २ ५ १— १
परा२ । जितमा३१उवा२३ । ई३४डा । ए२ । सनः
२ १ १ — १ २
स्वर्षदतिद्विषाः । सानःस्वर्षदता२इ । द्विषद्या३१
२ ५ १८ — १ २
उवा२३ । ई३४डा । पूर्वस्ययत्तआ२ । द्रिवद्या३१
२ ५ २ १ ८ ५ २
उवा२३ । ई३४डा । अ५शुमदाया२ । हा३१उवा२३ ।
२ ५ १ २ ८ ८ १ २ २ १
ई३४डा । सूनआधेहिनोवसाउ । पूर्त्तीः । शविष्ठ
— १ १ १ २ २ १ — १
आ२स्यताइ । इडा । पूर्त्तीः । शविष्ठा२स्यताइ ।
१ १ २ २ १ — १ १ १ २
यया । पूर्त्तीः । शविष्ठा२स्यताइ । इडा । वशोहि
८ ८ २ २ २ २१८ २
शक्रोनूनन्तन्नव्य५सा१न्या३साइ । प्रभोजनस्यवा३ ।
५ ५ १ ८ १ १ २
त्राहान् । समर्येषुब्रवा२३होइ । वाहा२१उवा२३ ।
१ ११११ १ ८ २८१८ — १ १
इट्इडा२३४५ । शूरो । योगोषुगा२च्छसाइ । इडा ।
१ २ २१८ — १ १ ११११
साखा । सुशिवो२हयूः । इडा२३४५ ॥—
१ २ २८१ ११११ १ १ ५८
आइया । हियिवा२३४५ । होइ । हो । याहा२१

२ ५ १ २ २ १ ११११
उवा२३ । ई३४डा । आइवा । हियम्ना२३४५इ ।
१ १ २र २ ५ १ २
होइ । हो । वाहा३१उवा२३ । ई३४डा । आइवा ।
२ १ ११११ १ १ २र
हिइन्द्रा२३४५ । होइ । हो । वाहा३१उवा२३ ।
२ ५ १ २ २१ ५५५५ १ १
ई३४डा । आइवा । हिपूषा२३४५न् । होइ । हो ।
२र २ ५ १ २ २र१११
वाहा३१उवा२३ । ई३४डा । आइवा । हिदेवा२३
११ १ १ २र २ ५
४५: । होइ । हो । वाहा३१उवा२३ । ई३४डा ॥१३

१४ । महादिवाकीर्त्यम् । स्तो० २,८; आ० ५,२। आर० ६.१,८–१८।

२र १र १र ३र २
हाउ । ३ । आयुः । ३ । ज्योतिः । २ । ज्योता
५र २ २ १र २ ३ ११११ १र२
३४ । औहोवा । ए३ । वाग्ज्योती२३४५: ॥ एवा
२ ३ ३र २ २र २ ३र २
हियेवा२३४औहोवा । हाउहउहाउहउहउ३४औहोवा ।
२र१ २ १ २ १
( एवं त्रिः ) हियेवा । हियम्नाइ । हिइन्द्रा ।
२र१ २र१ ११११ २र २ १ २
हिपूषान् । हिदेवा२३४५: ॥ वयोमनोवयःप्राणाः ।
२ १ २ २रर २ २ १ २ १
वयश्चक्षुर्वयःश्रोत्राम् । वयोघोषोवयोव्रातम् । वयो

२३भूताउ । वा३ । ई२३४५ ॥ वयोमना२३ः । होइ ।
हौवाश्रो२३४वा । वयःप्राणा२३ः । होइ । हौवा
श्रो२३४वा । वयश्चक्षू२३ः । होइ० । वयःश्रोत्रा२३म् ।
होइ० । वयोघोषा२३ः । होइ० । वयोन्नता२३म् ।
होइ० । वयोभूता२३म् । होइ । हौवाश्रो२३४५
वा६५६ । उ२३४५ ॥ ऊर्क् । हाउ । ३ । होइ
वाक् । ( एकविंशः ) । धर्मोऽ२धर्मः । ३ ॥ धर्मवि
धर्म । ३ । सत्यङ्काय । ३ । ऋतंवद । ३ । इष्टं
व२र्मूर्व२र्मवम् ।३॥ औहोहोवाहाई । २ । औहोहो
वाहा३१उवा२३ । भू२३४वात् । विभ्राड्बृहत्पिब
तुसोम्यम्म । श्वौहोहोवाहोइ । श्रौहोहोवाहोइ ।
औहोहोवाहा३१उ । वा२३ । जा२३४नात् । आयु
र्दधद्यज्ञपतावविह्रुतम् । औहोहोवाहोई । २ । औहो

होवाहा३१उ । वा२३ । वा२३४र्धात् । वातजूतोयो
अभिरक्षतित्मना । औहोहोवाहोई । २ । औहो
होवाहा३१उ । वा२३ । का२३४रात् । प्रजाःपि
पर्त्तिवद्धुधाविराजति । औहोहोवाहोई । २ । औहो
होवाहा३१उ । वा२ । २ । ए । अभाजौज्योतिरभा
जो२३४५त् ॥ भूमिः । ३ । अन्तरिक्षम् । ३ । द्यौः ।
। २ । द्या३४ । औहोवा । ए३ । भूताया२३४५ ॥
द्यौः । ३ । अन्तरिक्षम् । ३ । भूमिः । २ । भूमा
३४ । औहोवा । ए३ । आयुषे२३४५ ॥ हाउं ।
३ । ज्योतिः । २ । ज्योता३४ । औहोवा । ई२
३४५ ॥ १४

( *महादिवाकीर्त्य मिति दशानां शिरआदिसाम्नां समुदितानां मेकं नाम । तथा चाम्नायते—"महादिवाकीर्त्यम् सौर्यं वा दशानुगानं तस्य शिरएव औवा च स्कन्धकीकसो च पुरीषाणि च पक्षौ चाक्षौ घोरू च पुच्छचेतत्साम सुपर्णं मित्याचक्षते"-इति* )

१५,१६,१७ ॥ ज्येष्ठसामानि । ऊ०२,२,२,७ । आर०१,२,१६-१८ ॥

हाउ । ३ । आज्यदोहम् । ३ । मूर्धानन्दाई ।
वा३यर । तिम्पृथिव्याः । वैश्वानराम् । ऋतचा ।
जातमग्नीम् । कविꣳसम्रा । जा३मति । थिञ्जना
नाम् । आसन्नःपा । त्रा३न्न । यन्तदेवाः । हाउ ।
३ । आज्यदोहम् । २ । आज्यदोꣳहाउ । वा । ए ।
आज्यदोहम् । २ । ए । आज्यदोहा२३४५म् ॥ १५

हाउ । ३ । हुम्चिदोहम् । चिदोहम् ।२। मूर्धा
नन्दाई । एषा ऋक् । हाउ । ३ । हुम्चिदोहम् ।
चिदोहम् । चिदो३हाउ । वा३ । ई२३४५ ॥ १६

हाउ । ३ । च्योहम् । ३ । मूर्धानन्दाई । एषा
ऋक् । हाउ । ३ । च्योहम् । २ । च्यो३हाउ । वा३ ।
ए३ । ऋतम् ॥ १७

१८, १९, २० ॥ देवव्रतानि ॥ स्तो० २,९ । पार० ५,१,६–८ ॥

१ २ १ २ १ २

अधिप । ताइ । भिवप । ताइ । द्ववप ।

१ २ १ २ — —१

ताइ । स्वःपताइ । धनपताऽइ । नाऽमाः ।

२ १ र २ १र र र २ १र २ १र २ १ २र १ २र १र

मनुरनावृचहासूर्य्यैणस्वराडाज्ञेनमघवाद्द्क्षिणास्थप्रिया

२ १र र २र १ २र र २ १ र २ १र २ र १ २

तनूराज्ञाविश्वन्दाधार । वृषभस्त्वष्टात्वेषणयचौपति

१ र २ १ २ १र २ १र र २र १ २

रन्नेनगयःपृथिव्यास्त्वाणिकोग्निनाविश्वम्भूतम । व्यभ

र र १ र र २ १र २ र र १र र २ १र र

वोवायुनाविश्वाःप्रजाअभ्यपवयावषट्कारेणार्द्धभाक्सो

र १ र १र २र र १र र र २र र र १ २

मेनसोममाःसमित्यापरमेष्ठी । येदेवादेवाः । दिविषदः ।

१ र र २र र र र १र २र १ २ १र र २र र र

स्तेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । अन्तरि

१ २ १ र र १र र २र र र र १ २

क्षसदः । स्तेभ्यो० । येदेवादेवाः । पृथिवीषदः ।

१ र १र र २ १ २ १ र १र र

स्तते० । येदे० । अप्सुषदः । स्तते० । येदे० ।

२ १ १ १ र १र र २र १ २ १ र

दिक्षुषदः । स्तते० । येदे० । आशासदः । स्तते० ।

१ २ १र २ १ २र १ र २ १ २र १ र २ १ २ १

अवज्यामिवधन्वनोवितेमनुम्नयामसिमृडतान्नइहच्यस्म

२ १ २ १ २ २
भ्यम् । इडा२३भा । यद्दंविश्वंभुतम् । युयो३ ।
१ २ २
श्चाउ । वा२३ । ना२३४मा: ॥ १८

१ १ १ २ १ २ १
अधिप । ताई । मिन्नप । ताइ । चवप । ताई ।
२१ २ — —१ २ १
स्व:पताइ । धनपता२इ । ना२मा: । नमउत्ततिभ्य
२र र १र २१र२र १ २र र १ २१र २
योत्तन्वानेभ्यश्चनमोनोपङ्गिभ्यस्त्रोमवीतिभ्यश्चनमोस्त्वहा
२१२२र १ २१ २ र १ २१२
श्चम । तिद्धानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमः
१ १ र १ २१ २ १र २र १ २
त्वरमाश्चक्षारिभ्यश्चनमःश्रि । तैभ्यश्चश्यायिभ्यश्च
१२ १२र १२ १र२१र २ १र२१ २१र२
नमस्तिष्ठद्भ्योपतिष्ठम्भ्यश्चनमोयतेचवियतेचनमःपयेच-
१ २र ११ १र २१ २र १र२१ २र
विपयायच । अवज्यामिवधन्वनोवितैमन्युन्नयामसिस्म
१र १ १ २ १ २ १ २ १ र
डतान्नइएषसम्यम् । इडा२३भा । यद्दंविश्वंभूतम् ।
२ १ २ २
युयो३ । श्चाउ । या२३ । ना२३४मा: ॥ १९

१ २ १ २ १ २
अधिप । ताई । मिंचप । ताई । चचप ।
१ २१ २ — —१ १र
ताई । स्व:पताइ । धनपता२इ । ना२मा: । नमो

र २ १ र २ र र १र २र र १र २१ १र १
ग्रायनमोन्नमतयएकाद्यायचावमन्नाद्दायचनमोनमः ।
२ १र २र १२र १ २ १र २ १ २ र १ २ १ १र
रुद्रायतोरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपद्दायच
१ र २ १ १ १ २ र १ र २ १ २र र १र
पटरिणेचनमस्त्रियम्बकायचक । पहिनेचनमश्चाग्राये
२ र र १र २ १ २ १र २ १र २ १
व्यश्वम्रत्याग्रायेभ्यश्चनमः कृत्येभ्यश्चविरिम्फेभ्यश्चनमः
२ १ र २ १ १र १ २ १र २ १ र १ र १ १ २र
संघ्नतेचविघ्नतेच । अवज्यामिवधन्वनोवितिमन्युन्नयाम
१ र २ १ २ १ २ १ २ १
सिम्डतान्नइहचस्ताभ्यम् । इडा२३भा । यद्इदंविश्व
र २ १ ३ ५
भूतम् । युयो३ । आउ । वा२३ । ना२३४मः ॥ २०

२१—२६ । पुरुषव्रतानुगानम् । धा० ४, ६–७ ;
छ० २,२,३,५ । आर० ५,१,१२—१८ पट् ॥
"द्वे पुरुषव्रते ; पश्चानुगानं चेकानुगानं च" ब्रा० ।

१ १ २ २ १ र र २ २
उहुवाहाउ । ३ । सहस्रशीर्षाःपुरू२३षाः । सह
र १ २ १ २ १ र २ १र २
स्राचःसहस्रा२३पात् । सभूमिꣳसर्वतोवा२३त्वा ।
१ २ १र र २ १ २ २ १
अत्यतिष्ठद्दशाङ्गु२३लाम् । उहुवाहाउ । २ । उहु
ऽ र १ १ १ १ १
वा३हाउ । वा३ । इटइडा२३४५ ॥ २१

उहुवौहोवा२ । ३ । निषादूर्ध्वउदैत्पुरु२३षाः ।
पादोस्येहाभवत्पू२३नाः । तथाविष्वङ्व्यक्रा२३मत् ।
अशनानशनेआ२भी । उहुवौहोवा२ । २ । उहुवौ ।
होर । वा२३४ । औहोवा । ई२३४डा । उहुवौ
होवा२ । २ । उहुवौ । होर । वा२३४ । औहोवा ।
सु२३४वाः । उहुवौहोवा२ । २ । उहुवौ । होर ।
वा२३४ । औहोवा । ऊ२३४५ ॥ २२ ॥

इयौहोवा२ । ३ । पुरुषएवेद२सा२१र्वाम् । यद्भूतं
यच्चभाव्या२१याम् । पादोस्यसर्वाभूता२१नी । त्रिपा-
दस्यामृतन्दा२१इवी । इयौहोवा२ । इयौहोवा२ ।
इयौ । होर । वा२३४ । औहोवा । इ२३४डा ।
इयौ । ज्यो२३४तीः । इयौ । ई२३४५ ॥ २३ ॥

हाउ । ३ । तावानस्य । महा२३इमा२ । हाउ ।

१ र र र २ १र २ २र ३ र १र
३ । ततोज्यायाꣳश्चपूरु२३षा१ः । हाउ । ३ । उता

र २ २र १ र र २ १र
मृतत्वस्येशा२३ना३ः । हाउ । ३ । यदन्नेनातिरोहा

२ २५ २ १ १ १ १ १
२३ती३ । हाउ । ३ । वा३ । इट्इडा२३४५ ॥ २४

२५ १ र २ १र २र २५
हाउ३वा । ततोविराड़जायत । हाउ३वा ।

२ १र २र १ २ १र २ २५ १ २र १र २
विराजोअधिपुरुषः । हाउ३वा । सजातोअत्यरिच्यत ।

२१ १र र २ १ र २ १ २५ २ १ १
हाउ३वा । पश्चाद्भूमिमथोपुरः । हाउ३वा३ । ई२३

१ १
४५ ॥ २५

२र १ २ १ २ १ २ १ २
हाउ । ३ । अस्तौनस्विन् ।३। न्कृण्वाडन्कृण्वाम्

१ २ २ र १ २ —
। ३ । निधाड्माहे ।३। कयानश्चिवा३आभू१वा२त् ।

२र र र १ २ — २ र १ २
ऊतीसदावृ३धाःसा१खा२ । कयाशचिष्ठा३यावा१र्त्ता

२र १ २ १ २ १ २ १ २
२३ । हाउ । ३ । अस्तौनस्विन् ।३। न्कृण्वाडन्कृण्वाम् ।

१ २ २ २ ३
३ । निधाड्माहे । २ । निधा२३इ । मा२ । हा२३४

५र र १ १र २ १ १ १
औहोवा । सुवर्ज्योती२३४५ः ॥ २६

२७ ॥ तवश्यावीयम् ॥ चतुर्गानपन्येभ्यः पृथगेव ॥

१ १११२ १ २ २ २ १ २
ॐहा॒२३४५ । ॐभूः । ॐभूमिर्दि॒वमन्तरिक्षम् ।
२ २ २ २ २ १ २ २
ॐभुवः । ॐऋचोयजू॒ष्ष्यिसामानि । ॐभार्गोदेवस्य
२ १११२ १ १ २ २ २ २
धीमाहो२३४५ । ॐस्वः । ॐप्राणोपानोव्यानः
२ २२ १ १ २१२ २ १११२
समानउदानः । ॐधियोयोनःप्रचो२३४५ । ॐमहः ।

ॐजनः । ॐतपः । ॐसत्यम् । ॐपुरुषाः । ॐ
२ २ २१ १ १११२ —
परोरजोयमृतोम् । ॐहा॒२३४५ । हुम् । चा२ ।
१ २११११ १ २ २
दायो । चा२३४५ । ॐभूमिरन्तरिक्षंद्यौः । ॐ
२ २ २
तत्सवितुर्वरेण्ययोम् । ॐऊऽ२र्क् । हाउ३ । होऽ३
२ १२१२ २ २२१ १ २
वाक् । ॐवह्नोचोयजोचमृतोम् । ॐऊऽ२र्क् । हाउ३ ।
१ १२२२ २२ २ २२१
होऽ३वाक् । ३ । ॐप्राणोपानोव्यानःसमानउदानः ।
२ २ २११११ १ २
धियोयोनःप्रचो२३४५ । ॐऊऽ२र्क् । हाउ३ । होऽ३
२ १२ १ १२१२
वाक् । ३ । धर्मोऽ२धर्मः । ३ । धर्मविधर्म । ३ ।

२ १ ८ २   २ १ २   १ १
सत्यज्ञाय । ३ । मतंवद । ३ । हुव्वंवऽ२ वंवऽ२
१
वम् ।३ ॥ २७

२८ ॥ आदित्यव्रतम् ॥ स्तो० १,८ । आर० ६,१,१८ ॥

१ र २र१र र२   १   र   र २र
सन्त्वाभूतान्यैरयन् । होई । सन्त्वाभव्यान्यैरयन् ।
१   र २ १ र २   १   र   २
होई । सन्त्वाभविष्यदैरयत् । होइ । सन्त्वाभुवन
र   १   र २र१र२   १
मैरयत् । होई । सन्त्वाभूतमैरयत् । होई ॥ २८

२९ ॥ आदित्यव्रतं द्वितीयानुगानम् ॥ आ० ५,१-५ । आर० ६,२,१॥

१ —१   —१   —
॥ ॐ ॥ उवी२उवि । उविहो२उवि । ३ । द्युति२
२   —१   —१   —
द्युति । द्युतिहो२द्युति । ३ । असी२असि । असिहो२
१   र २ र १ २ २र   —१
असि । ३ । अह्रुचोदिवंपृथिवीम् । असी२असि ।
—१   २   २ १र र २र र
असिहो२असि । ३ । पतिर । अपामोषधीना२म् ।
१   २ ५ २   ५   १   १र१र२र
ओई । मताइरा२३४सी । ३ । चाइ । चन्द्रेवाना
१ २र१र र   १ र २र र १र र २ १ १
मुदगादनीकम् । वाइमखेपान्देवानाएसमिदजसं

ज्योतिराततार्म् । होई ।३। आयुर्यन् ।३।
स्वः ।३। चक्षुर्मित्रस्यवरुणस्याग्नेः। सुवःसठ्
सर्पसठ्सार्पा ।३। जनावनठ्सुवा२ःसुवः । जना२
वना३म् । सुवा२ःसुवः ।३। आप्राद्यावापृथिवी
आन्तरी२३क्षा३म् । स्वपिप्रसपीऐही ।३। अस्तो
पतस्वभानवाऐही । विमानविश्वयामताऐही । ग्रावा
गोवर्हिर्पिप्रियाऐही । इन्द्रस्यरठ्हियस्वृक्षादैही ।३।
इन्द्रा२ । स्यारा२ । हिया२म् । वृहदिन्द्रस्यरठ्हिय
स्वृक्षादैही ।३। सूर्यआत्माजगतस्थुषा२३श्चा३ । अन्त
श्चरतिरोचनाऐही ।३। अस्यप्राणादपानताऐही ।३।
व्यख्यन्महिषोदिवाऐही ।३। मोऽएतिमोऽएति ।३।
प्रोऽएति ।२। मो२३ । एता३४ । औहोवा ।
ए३ । देवाद्दिवाज्योतो२३४५ः ॥ २८

२०,२१ । गन्धर्वाप्सरसां मानन्दौ ॥ आ०१,४ । भार०४,२,२ ; ३ ॥

उवी२ । ३ । हिगी२ । ३ । हिगिगि । ३ ।
आयङ्गौःपृश्निरक्रमीदेही । ३ । असदन्मातरम्पुराऐही
। ३ । पितरञ्चप्रयंत्सुवाऐही । ३ । उवी२ । ३ । हिगी२
। ३ । हिगिगि । ३ ॥ ३०

उवी । ३ । हिगी । ३ । हिगिगी । ३ । आयङ्गौः
पृश्निरक्रमीदेही । असदन्मातरम्पुराऐही । पितरञ्च
प्रयंत्सुवाऐही । उवी । ३ । हिगी । ३ । हिगिगी ।
३ ॥ ३१

१२ ॥ मतीपदः ॥ मौ० २,१० । भार० ६,२,४ ॥

हाउ२हाउ । भ्राजाघोषा । ३ । उदुत्यञ्जा । ३ ।
चित्रंदेवानामुदगादनी२३काइम् । हाउ२हाउ । भ्राजा
घोषा । ३ । तवेदमम् । ३ । यद्युर्मितस्तवरुपस्था२३

